(2)

[1]अस्मिन् शरीरविज्ञानं न क्वचित् प्रतिष्ठितं भवति, न च विज्ञानादृते शरीरमुपलभ्यते। तेन हि भद्रपाले नादृष्टसत्यमिदं विज्ञानं पश्यति, न चेदं करतलामलकवद्दर्शनमुपगच्छति।

## महासन्ध्याव्याकरणमहायोगतन्त्र

[2]रूपाद्याध्यात्मिकान् धर्मान् पश्येत् विपश्यनोच्यते ।
अक्षोभ्यादियथासंख्यं कल्पयेत् शमथो भवेत् ।।

अनयोर्निःस्वभावत्वात् तथताशान्तसंज्ञकम् ।
तथतामण्डले योगी सर्वबुद्धान् प्रवेशयेद् ।।

## मूलतन्त्र

(1)

[3]प्रतिपद्यस्व कुलपुत्र स्वचित्तप्रत्यवेक्षणं समाधानेन।

(2)

[4]सर्वदेव्युपभोगैस्तु सेव्यमानैर्यथासुखम् ।
स्वाधिदैवतयोगेन स्वात्मानं प्रपूजयेत् ।।

पूज्यतेऽनुयोगेन सर्वयोगसुखानि तु ।
समास्वादयमानस्त्वतियोगेन सिद्धयति ।।

---

1. च० मे० प्र०, पृ० 8
2. च० मे० प्र०, पृ० 98
3. च० मे० प्र०, पृ० 47
4. च० मे० प्र०, पृ० 88-89

अनेन सर्वबुद्धात्मा रसायनसुखेन तु ।
सिद्ध्येत् श्रीवज्रसत्त्वायुर्यौवनारोग्यसत्सुखम् ।।

सर्वबुद्धमहाकायः सर्वबुद्धसरस्वती ।
सर्वबुद्धमहाचित्तः सर्वबुद्धमहामहः ।।

सर्वबुद्धमहाराजा सर्ववज्रधराधिपः ।
सर्वलोकेश्वरपतिः सर्वरत्नाधिपेश्वरः ।।

ताभिः संरम्यमाणस्तु यात्युत्पत्तिं तु गच्छतः ।
सर्वदेवीमहासिध्य( द्ध )श्चक्रवर्ती प्रसिध्यति ।।

(3)

[1]सेवयन् कामगुणान् पञ्च ज्ञानार्थिरागिणः सदा ।

## मूलसूत्र

(1)

[2]दशकुशलान् कर्मपथानिच्छन्ति ज्ञानवर्जिताः ।

(2)

[3]दुष्करैर्नियमैस्तीव्रैः सेव्यमानो न सिद्ध्यति ।
सर्वकामोपभोगैस्तु सेवयंश्चाशु सिद्ध्यति ।।

---

1. च० मे० प्र०, पृ० 94
2. च० मे० प्र०, पृ० 52, 78
3. च० मे० प्र०, पृ० 79

(3)

[1]अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वतथागतकायवाक्चित्तवज्रविद्याव्रत-समादानचर्यां स्वकायवाक्चित्तवज्रेभ्यो निश्चारयेत्।

**कायवाक्चित्तवज्राणां कायवाक्चित्तभावनम् ।**
**स्वरूपेणैव तत्कार्यं लघुसिद्धिरवाप्यते ।।**

## योगतन्त्र

**[2]सर्वाङ्गभावनातीतं कल्पनाकल्पवर्जितम् ।**
**मात्राबिन्दुसमातीतम् एतन्मण्डलमुत्तमम् ।।**

**विशती( ति ) यः सर्वभावानां रूपारूपेषु निर्मलम् ।**
**बोधितश्चोदितं चित्तं मण्डलं मण्डलाकृतिम् ।।**

**अस्तीति नास्तीति उभेऽपि अन्ता**
**शुद्धी अशुद्धीति इमेऽपि अन्ता ।**
**तस्मादुभे अन्तविवर्जयित्वा**
**मध्येऽपि स्थानं न करोति पण्डितः ।।**

**आकाशानन्तमित्यर्थं सर्वभूतमहालयम् ।**
**विभूतिः श्रीविभो राजा सर्वाशापरिपूरकः ।।**

## रत्नकूटसूत्र

[3]तद्यथा काश्यप इक्षुक्षेत्रेषु[ धान्यक्षेत्रेषु] मृद्वीकाक्षेत्रेषु सङ्कारकुट उपकारीभूतो भवति। एवमेव बोधिसत्त्वस्य क्लेशा उपकारीभवन्ति। तद्यथा काश्यप मन्त्रौषधिपरिगृहीतं विषं न विनिपातयति, एवमेव प्रज्ञोपायसमन्वितो बोधिसत्त्वः क्लेशैर्न विनिपात्यते।

---

1. च० मे० प्र०, पृ०
2. च० मे० प्र०, पृ० 65-66
3. च० मे० प्र०, पृ० 80

## वज्रमण्डालङ्कारतन्त्र

[1]ज्वलन्तं दीपसदृशं हृदि मध्यमनाहतम् ।
अक्षरं परमं सूक्ष्मम् अकारं परमं प्रभुम् ।।

## वज्रमाला

[2]पञ्चहृदयमाश्रित्य पञ्चतनुविनिर्गतम् ।
पञ्चवायुसमायुक्तं पञ्चकामोपभोगकृत् ।।

## वज्रमुखीयोगतन्त्र

(1)

[3]यदुत प्राणापानोदानसमानव्यानोद्वाहविवाहसंवाहनिर्वाहप्रवाहश्चेति।

(2)

[4]प्राणापानोदानसमानव्यानोद्वाहविवाहसंवाहप्रवाहनिर्वाहश्चेति।

## वज्रोष्णीषतन्त्र

(1)

[5]वज्रपाणिराह कथं भगवन् सर्वधर्माणामालयं परमार्थसत्यम्? भगवानाह—सर्वधर्मा गुह्यकाधिपते स्कन्धायतनात्मका जगत्स्थावरजङ्गमास्ते हि परमार्थसत्याश्रयाः, अस्थानयोगेन। परमार्थसत्यमनात्मकमनभिभूतं सर्वशून्यं न वृद्धिर्न परिहाणिः सुविशुद्धं खसमं निर्मलस्वभाव-मनक्षरमवाच्यं कायवाक्चित्तरहितं न तदस्ति न च नास्ति न चरति न च न चरति न दूरे नासन्ने न शून्यं नाशून्यं न मध्यमश्च तदिदं परमार्थसत्यम्। अतस्तस्य परमगाम्भीर्यदुरवगाह-

---

1. च० मे० प्र०, पृ० 31
2. च० मे० प्र०, पृ० 11
3. च० मे० प्र०, पृ० 15
4. च० मे० प्र०, पृ० 24
5. च० मे० प्र०, पृ० 3

स्यानुत्पादानिरोधस्य हेतुप्रत्योत्पन्नं संवृतिसत्यप्रत्ययम्। संवृतिसत्यं तावत् स्वप्नेन्द्रजालदर्पण-प्रतिबिम्बवन्मायासमाधिः स्वलक्षणचतुर्ब्रह्मविहारहेतुः। ताभ्यां युगनद्धवाहिक्रमः। सोऽयं भूतनयात्मकः समाधिः सत्त्वोपलम्भोपगमः। समस्तमेतत् तत्त्वम्।

(2)

[1]भगवानाह— शृणु गुह्यकाधिपते त्रिविधं कायदुश्चरितम्, चतुर्विधं वाग्दुश्चरितम्, त्रीणि चित्तदुश्चरितानि, ततो नरकपातं भवति।

वज्रपाणिराह— भाषतु भगवान् भाषतु सुगतः। कतिविधं कायप्रभेददुश्चरितम्, वाग्प्रभेददुश्चरितम्, चित्तप्रभेददुश्चरितमिति।

भगवानाह— तदेव गुरुसामान्यं गुह्यकाधिपते दुश्चरितम्। मातापितृगुरुजनप्रभृतीनां घातनं गुरुदुश्चरितम्। प्राणातिपातप्रभृतयोऽकुशलकर्मपथाः सामान्यदुश्चरितम्। वाग्दुश्चरितं यदुत सद्धर्मप्रतिक्षेपादेव पारुष्यवचनं तदेव दुश्चरितं वाक्यम्। मातापितृगुरुप्रभृतीनां पारुष्य-वचनं गुरुदुश्चरितं वाक्यं क्वचित् पुद्गलानां श्रद्धाप्रतिपत्तिकुशलानां कथाप्रसङ्गेन नास्ति पर-लोक इत्युदारवचनाल्लोकोत्तरमृषावादं कुशलकर्मविघ्नं कुर्वन्ति। संभिन्नप्रलापं [पारुष्यम-कुशलकर्मकथा] सामान्यवाग्दुश्चरितम्। चित्तदुश्चरितं यदुत प्रथमस्त्यानं तदेव प्रकृतिश्चित्त-प्रकृतिदुश्चरितम्। [चित्तोद्भूतप्रकृतिदुश्चरितमविद्याप्रकृति]दुश्चरितम्।

वज्रपाणिराह— भाषस्व भगवन् भाषस्व सुगतचित्तचैतसिकाऽविद्यादुश्चरितानि।

भगवानाह— शृणु गुह्यकाधिपते विघातेन चित्तं विरक्तेन चित्तं दशकुशलकर्मपथे विरक्तं तदेव दुश्चरितम्। मददर्पाहङ्कारक्रोधसत्त्वनाशनं रागचित्तपरदाराऽऽसक्तिपरद्रव्याप-हरणम्। गुरुजनं प्रति कुटिलचित्तं चित्तदुश्चरितम्, चैत्तसिकं दशकुशलकर्मपथषट्पारमिता-विक्षिप्तविस्मृतिर्द्वन्द्वाङ्कितवदनो मनसान्धकारतयाऽविद्या सामान्यदुश्चरितमिति।

## विज्ञानसंक्रान्तिसूत्र

(1)

[2]तद्यथा भद्रपाले वायुधातुररूपी अनिदर्शनोपादानाद्रूपी संदृश्यते तत्र दर्शनं वृक्ष-स्पन्दनसमुदीरणरवरभसतटतटाजनितनिर्घोषः शीतोष्णस्पर्शजनितवेदी, न चास्य करचरण-

---

1. च० मे० प्र०, पृ० 49-51
2. च० मे० प्र०, पृ० 45

नयनवक्त्रोपलब्धिर्भवति, न च वर्णाधिक्येनोपलक्षते श्यामो वा गौरो वेति। एवमेव भद्रपाले! अयं विज्ञानधातुर्न रूपेणोपलक्षते न रूपावभासमागच्छति, कारणविशेषैस्त्वयं विज्ञानधातुरवगन्तव्यः।

(2)

[1]भगवानाह— अस्यैव मया महौषधे गाथाद्वयस्यार्थे गिरिशिखरतटादात्मा मुक्तोऽनेकानि च दुष्करशतसाहस्राण्यनुभूतानि। पृच्छ त्वं महोषधे यद्यदेवाकांक्षस्यहं ते व्याकरिष्यामि। एवमुक्ते महौषधिर्बोधिसत्त्वो भगवन्तमेतदवोचत्— किं रूपी भगवन्निदं विज्ञानम्।

भगवानाह—यद्रूपी महोषधे मायाकारस्याग्निः यद्रूपिणी पुरुषच्छाया जलतलान्तर्गता व्यक्ताव्यक्तरूपिणी यत्पुनर्महोषधे कथयसि कथमनुत्पन्नस्य प्रथमच्युतस्याकृतिर्द्रष्टव्येति। तद्यथा— जलतलान्तर्गताच्छाया पुरुषरूपेण च संदृश्यते, न च तस्यान्तर्गतावभासा द्रष्टव्याः। तस्य खलु पुनर्महोषधे मम शिरःकरचरणसमन्वागतस्य पुरुषस्य जलतलान्तर्गतस्य, नैवं भवत्युष्णं वा शीतं वा कायक्लमथो वेति। न च तस्य तच्छरीरान्मांसपेश्युपसम्भवति। न च छायाधातुभिर्व्याकुलीभवति। न च तस्मात्पुरुषप्रतिबिम्बाज्जलतलान्तर्गताच्छब्दो निश्चरति, दुःखशब्दः सुखशब्दो वा। एवमिदं विज्ञानं प्रथमच्युतशरीरबिम्बं परित्यज्य स्वबिम्बाकृतिवद्भवति।

## विनयामोघसिद्धिमहातन्त्र

**[2]बध्यति येन जडः परिमुच्यति तेन बुधः ।**
**बोधिसत्त्वभावनया विपरीतमिदं सकलम् ।।**

**येन मूढाः प्रबध्यन्ते शीर्यन्ते रौरवान्तिके ।**
**तैरेव हि विमुच्यन्ते सुखं प्रज्ञाबलेन तु ।।**

1. च० मे० प्र०, पृ० 56-57
2. च० मे० प्र०, पृ० 80-81

# वैरोचनाभिसम्बोधितन्त्र

(1)

[1]अपितु गुह्यकाधिपते मन्त्राणां लक्षणं सर्वबुद्धैर्न कृतं न कारितं नानुमोदितम्। तत्कस्य हेतोः?

एषां धर्माणां धर्मता यदुत उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषा धर्माणां धर्मता यदुत मन्त्राणां मन्त्रधर्मता। तद् गुह्यकाधिपते! अस्ति कामधात्वीश्वरस्य मदयन्तिका नाम विद्या तया सर्वकामावचरान् देवपुत्रान् मदेन मूर्च्छयति। विविधविचित्र-रमणीयांश्च प्रदेशान् दर्शयति। विविधविचित्रपरिभोगांश्चाभिनिर्माय परनिर्मितवशवर्तिभ्यो देवेभ्यः प्रयच्छत्यात्मना च परिभुङ्क्ते।

तद्यथा—अस्ति महेश्वरस्य देवपुत्रस्य मनोजवा नाम विद्या तया त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वकार्यं करोति। सर्वोपभोगपरिभोगांश्चाभिनिर्माय शुद्धावासकायिकेभ्यो देवेभ्यः प्रयच्छत्यात्मना च परिभुङ्क्ते। तद्यथा— माहेन्द्रजालिको मन्त्रैर्विविधविचित्रार्थान् मनुष्यादि-कान् दर्शयति। तद्यथा असुरान् मन्त्रैर्मायां दर्शयति। मन्त्रैर्विषमपनयति ज्वरादिकं च। तद्यथा— मन्त्रकल्पिकादेवमन्त्रैः श्रेयः सत्त्वेभ्यः प्रयच्छति। मन्त्रैरग्नेरुष्णता नश्यति शीतता च सम्भवति। एभिर्निदर्शनपदैर्मन्त्रप्रभावोऽभिश्रद्धातव्य इति। स च मन्त्रप्रभावो हि न मन्त्रतो निष्क्रामति, न सत्त्वेषु प्रविशति, न द्रव्यादुत्पद्यते, न कर्तुर्दृश्यते। अथ च कुलपुत्र मन्त्राधिष्ठान-धर्मतासम्भवन्नातिक्रामति कालत्रयातीतत्वात्। सर्वथाचिन्त्यप्रतीत्यसमुत्पादात् सिद्ध्यति। कुलपुत्र! अतः सर्वे धर्मा अचिन्त्यस्वभावेनेत्यधिगम्य सदा तत् सततमन्त्रनयोऽनुगन्तव्यः।

(2)

[2]स्वचित्तस्य यथाभूतं परिज्ञानं बोधिः।

(3)

[3]इन्द्रायुधनिभं कायं लभते तत्त्वभावनात् ।

---

1. च० मे० प्र०, पृ० 34
2. च० मे० प्र०, पृ० 38
3. च० मे० प्र०, पृ० 57

(4)

[1]उपायरहितं ज्ञानं शिक्षा चापि हि देशिता ।
श्रावकाणां महावीरं अवता( धा )रय तेषु वै ।।

## व्याख्यातन्त्र

(1)

[2]नासिकाच्छिद्रसंभूतः पञ्चबुद्धकुलस्थितः ।
पञ्चवायूर्ध्वसंचारो देहे चरति नित्यशः ।।

संवृतिघ्राणसंचाराद् द्वारात्तस्य विनिसृताः ।
वामदक्षिणद्वन्द्वाश्च स्तब्धश्चैते चतुर्विधाः ।।

दक्षिणात् प्रसरो धातुर्हुतभुङ्मण्डलञ्च वै ।
रक्तवर्णमिदं वक्त्रं पद्मनाथस्य सञ्चरेत् ।।

वामाच्च प्रसरो धातुर्वायुमण्डलनिःसृतः ।
हरितः श्यामसंकाशः कर्मनाथस्य सञ्चरेत् ।।

द्वन्द्वस्य प्रसरो धातुः कनकवर्णस्य सन्निभः ।
माहेन्द्रमण्डलश्चैव रत्ननाथस्य सञ्चरेत् ।।

स्तब्धो न प्रसरो धातुः क्षणाद्वारुणमण्डलः ।
शुद्धस्फटिकसंकाशं वज्रनाथस्य सञ्चरेत् ।।

सर्वधातुं समुद्धृत्य ह्याधाराधेयधारितः ।
वैरोचनमहाकायो मरणान्ते विनिश्चरेत् ।।

1. च० मे० प्र०, पृ० 78
2. च० मे० प्र०, पृ० 25-26

चतुर्मण्डलमेतद्धि जपेन्नित्यं समाहितः ।
अहोरात्रं सदा जापो मन्त्रिणां जपसंख्यया ।।

(2)

[1]निर्विकल्पो यदा वीरः स्थितिं हित्वा तु लौकिकीम् ।
आचरेत् सर्वकार्याणि बुद्धाः पश्यन्ति तत् सदा ।।

बालवद्विचरेद्युक्त्या सर्वतश्छिन्नसंशयः ।
निराभोगो यदा योगी तदा वर्षन्ति संपदः ।।

अशेषपापयुक्तानां मोहावरणसुस्थिताः ।
उन्मत्तव्रतयोगेन षण्मासादमोघसिद्धयः ।।

सर्वबुद्धान् स्वयं पश्येत् सर्वकामैः प्रपूर्यते ।
न क्षीणो न च हानित्वं स्वेच्छायुर्जायते वपुः ।।

अनुत्तरां परां बोधिं संप्राप्नोत्यप्रयत्नतः ।
विना यत्नेन सिध्यन्ति सर्वकामसुखोत्सुकाः ।।

गम्भीरपदं नित्यं गच्छेत् तिष्ठन् निषण्णकः ।
प्रभास्वरज्ञानकौशल्याद् योगिनां लक्षणं सदा ।।

अनेन ध्यानयोगेन चित्तरत्नं दृढीभवेत् ।
अधिष्ठानं च कुर्वन्ति बुद्धा बोधिप्रतिष्ठिताः ।।

एवं भूत्वा निविष्टस्तु भावयेद् भावतत्परः ।
यावन्न खिद्यते चित्तं समाहितमनाः सुधीः ।।

---

1. च० मे० प्र०, पृ० 99-100

खिन्नस्तु पर्यटेत् पश्चाद्यथारुचितचेष्टितः ।
भावयेद्विपुलां बोधिमीषदुन्मीलितेक्षणः ।।

हसन् जल्पन् क्वचित्तिष्ठन् क्वचित्कुर्यात् प्रवर्तनम् ।
भावनासक्तचित्तस्तु यथा खेदो न जायते ।।

एवं समाधियुक्तस्य निर्विकल्पस्य मन्त्रिणः ।
कालावधिं परित्यज्य सिद्ध्यतेऽनुत्तरं पदम् ।।

## शूरङ्गमसूत्र

(1)

[1]अथ खलु दृढमतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—कथं शिक्षमाणो भगवद्बोधिसत्त्वः शिक्षते इह शूरङ्गमे समाधौ सर्वशिक्षामन्यतया। एवमुक्ते भगवान् दृढमतिं बोधिसत्त्वं महासत्त्वमेतदवोचत्-स्यात्, यथाऽपि नाम दृढमते इष्वस्त्रान्तेवासी इष्वस्त्र-शिक्षकश्च पूर्वं गोकिलं विध्यति, यदा गोकिले शिक्षितो भवति तदा फलके विध्यति, यदा फलके शिक्षितो भवति तदा लक्षे विध्यति, यदा लक्षे शिक्षितो भवति तदा दण्डे विध्यति, यदा दण्डे शिक्षितो भवति तदा शतबाले विध्यति, यदा शतबाले शिक्षितो भवति तदा दशबाले विध्यति, यदा दशबाले शिक्षितो भवति तदा बाले विध्यति, यदा बाले शिक्षितो भवति तदा शब्दवेधे विध्यति, यदा शब्दवेधे शिक्षितो भवति तदा अक्षणवेधे विध्यति, यदा अक्षणवेधे शिक्षितो भवति तदा निर्यातो भवति। इष्वस्त्रशिक्षायां स आकांक्षमाणो रात्र्यामन्धकारतमिस्रायां यस्य यस्यैव शब्दं शृणोति मनुष्यस्य वा अमनुष्यस्य वा तस्य तस्यैवान्तिके अनाभोगेनाक्षूण(क्षुण्ण) इव शरो गच्छति। शब्दवेधे स्थितो न क्वचित् शिक्षते। तत्कस्य हेतोः? पूर्वं सुशिक्षितत्वात्, तस्य तेन पूर्वाविध्याभिमुखी भवन्ति।

एवमेव दृढमते इह शूरङ्गमे समाधौ प्रतिष्ठितस्य बोधिसत्त्वस्य न भूयः क्वचिद्धर्मे शिक्षितव्यं भवति। तत्कस्य हेतोः? पूर्वं सुशिक्षितत्वादेव समाधिः सर्वबोधिसत्त्वगुण-धर्मोऽस्याभिमुखीभवति।

---

1. च० मे० प्र०, पृ० 4-5

(2)

[1]बुद्धविषयानुगतास्ते सत्पुरुषा: स्वज्ञानवशवर्तिनो यैरयं शूरङ्गमसमाधि: प्रतिलब्ध:। नाहं तं बोधिसत्त्वमिति वदामि, अप्रतिलब्धत्वादस्य समाधे:। नाहं तं बोधिसत्त्वमभिज्ञा-प्राप्तमिति वदामि, अप्रतिलब्धत्वादस्य समाधे: [नाहं तं बोधिसत्त्वं विशुद्धिकरमिति वदामि अप्रतिलब्धत्वादस्य समाधे:।] नाहं तं बोधिसत्त्वं दानशीलक्षान्तिवीर्यध्यानप्रज्ञासम्पन्नमिति वदामि, अप्रतिलब्धत्वादस्य समाधे:। नाहं तं बोधिसत्त्वं बहुश्रुतं प्रतिभानसम्पन्नमिति वदामि, अप्रतिलब्धत्वादस्य समाधे:। तस्मात् तर्हि कुलपुत्र सर्वनिर्याणपथे निर्यातुकामेन बोधिसत्त्वेन महासत्त्वेनेह शूरङ्गमसमाधौ शिक्षितव्यम्।

## संध्याव्याकरणमहाव्याख्यातन्त्र

(1)

[2]अथ भगवान् महावज्री वज्रजापार्थभाषिणम् ।
प्रत्युवाच ततः सम्यक्प्रणम्यैकं जगद्गुरुः ।।

लौकिकागममेवेदं बोधिचित्तं प्रकाशितम् ।
लोकोत्तरं कथं नाम प्रतिपत्स्यन्त्यागामिकाः ।।

सर्वदृष्टिप्रहाणाय त्वया धर्मो हि देशितः ।
तत् कथं बोधिचित्तं तु सा दृष्टिः सुदृढीकृता ।।

उक्तमर्थं न बुध्यन्ति संध्यायवाक्यमोहिताः ।
यथारुतं ते गृह्णन्ति तथैव हि पचन्ति च ।।

अथ भगवान् विश्वो वज्रपाणिं वदेत् ततः ।
साधु साधु च गुह्येश व्याकृताऽऽगामिका त्वया ।।

1. च० मे० प्र०, पृ० 74-75
2. च० मे० प्र०, पृ० 22-23

बोधिचित्तं भवेद्वायुरम्बरे च व्यवस्थितः ।
प्राणभूतश्च सत्त्वानां पञ्चात्मा दशसंज्ञकः ।।

प्रतीत्य द्वादशाङ्गाख्यं स्वभावात् त्रितयं भवेत् ।
सर्वेन्द्रियप्रधानेदं वाय्वाख्यं बोधिचित्तकम् ।।

अव्यक्तं सूक्ष्ममित्येवं व्यक्तमित्युच्यते सदा ।
तदाश्रयात्तु कर्माणि कुर्याद्विषयादिकं जनः ।।

शान्तिकं पौष्टिकं चैव वश्याभिचारकं तथा ।
बोधिचित्तात्तु तत्सर्वं त्रितत्त्वनिलयाश्रया[ त् ] ।।

यावच्चालोकसंकेताः कल्पिता विविधास्तथा ।
भवन्ति बोधिचित्तात्तु विकल्पा वायुतः सदा ।।

सुखदुःखादिको धर्मो बीजादेव विधीयते ।
बोधिचित्तस्वभावोऽसौ स्कन्धाद्यद्वयकोपमः ।।

प्रज्ञोपायैकयोगेन बोधिचित्तं जगद् भवेत् ।
स्वयं समुच्चरेत् स्वामी ध्यानाध्ययनवर्जितः ।।

दिवारात्रिविभागेन चन्द्रसूर्यप्रयोगतः ।
निश्वासो [ हि ] जगद्व्यापी बोधिचित्तैकमारुतः ।।
शुभाशुभफलं त्यक्त्वा भवत्येव नभोपमः ।।

(2)

[1]एकादिर्नवमध्ये तु दशभिर्यो न बध्यते ।
तमबद्धं विजानीयात् स वेत्ति परमं पदम् ।।

1. च० मे० प्र०, पृ० 27-29

स्वरव्यञ्जनवर्णाश्च नवसंख्यानुवर्तिनः ।
अबद्धान्योन्यसंयोगा यावन्ति स जगद्गुरुः ।।

यो बुद्धा ( द्ध्वा ) वाञ्छयेत् सिद्धिं विमुक्तिफलसम्पदम् ।
स तदेव समाप्नोति अरूपो रूपवर्जितम् ।।

भूतान्तेन समायुक्तं कलादिषोडशे स्थितम् ।
पञ्चपञ्चकसंयुक्तं चतुस्त्रयनियोजितम् ।।

सानुस्वारं सदीर्घं च गुणसंयोगलोपवत् ।
ह्रस्वं समस्तवाक्यं स्यान्न चानेकं न चैककम् ।।

यकारार्थेन यत्किञ्चित् कर्तव्यं सिद्धिमिच्छता ।
रेफादित्रितयेनैव जगत्कार्यं प्रवर्तते ।।

ये वर्णाः पृष्ठतः प्रोक्ता अभिमुखाश्च ये पुनः ।
स्त्रीपुन्नपुंसकास्ते च धात्वादिपरिकल्पिताः ।।

अध ऊर्ध्वसमायुक्ता ज्ञात्वा बुद्ध्या नियोजिताः ।
षड्भिरुक्तं चतुस्त्रै( स्त्र्यै )कान्निःस्वभावैकभावजाम् ।।

त्रा( त्र्या )द्यार्थे समायोज( ज्य ) त्र्यध्वज्ञानं तु जायते ।
स्वप्नेन्द्रजालवद्बिध्वा कुर्याज्जगत् त्रिधातुके ।।

प्रत्याहारमिदं मन्त्रं निःस्वभावस्वभावजम् ।
ततः परिणतं रूपं यद् दैवतोपलम्भकम् ।।

सांकेतिकं त्रितत्त्वस्थं प्रकृतिजापलक्षणम् ।
अनाख्येयमनुच्चार्यं बोधिचित्तमिदं परम् ।।

तदेव त्रितयैकं स्यादनिर्गममनागमम् ।
अनिरोधः प्रशान्तश्च शाश्वतोच्छेदवर्जितम् ।।

त्र्यध्वविदाऽकृतसंकल्पमाकाशाभेदलक्षणम् ।
पारमार्थिकमेवेदं प्रत्यात्मवेद्यलक्षणम् ।।

सर्वास्वपि क्रियाश्चै( स्वे )व निषद्यादिषु योगवित् ।
अनाख्येयमनुच्चार्यं त्र्यध्वातीतं जपेत् सदा ।।

पाण्डरादि जपः ( पाः ) प्रोक्ताः पञ्चविंशच्छतद्वयम् ।
चतुर्भिर्गुणितं सम्यक् चतुर्योगं शतं नव ।।

नवशतं तु यद् दृष्टं चतुर्विंशतिपरिक्रमैः ।
प्रत्युत्पादाद् भवेत्तत्तु द्वययुतं शतषोडशम् ।।

तदित्थं गुह्यसन्ध्यायां सूक्ष्मयोगं प्रकाशितम् ।
ध्यानाध्ययनवीतं तु तथापि जप उच्यते ।।

## सन्ध्यावचन

[1]झटितिज्ञानसंभूतं खद्योतकाकारं दशदिग्व्यापिनं ज्वलन्तम् ।

## समाजोत्तर

(1)

[2]पञ्चज्ञानमयं श्वासं पञ्चभूतस्वभावकम् ।।
निश्चार्य पद्मनासाग्रे पिण्डरूपेण कल्पयेत् ।।
पञ्चवर्णं महारत्नं प्राणायाममिति स्मृतम् ।।

---

1. च० मे० प्र०, पृ० 46
2. च० मे० प्र०, पृ० 22

(2)

[1]प्रतीत्योत्पद्यते यद्यदिन्द्रियैर्विषयैर्मनः ।
तन्मनस्त्वशीतिख्यातस्त्रकारस्त्राणनार्थतः ।।

## सर्वकर्मावरणविशुद्धिसूत्र

(1)

[2]तत् किं मन्यसे भिक्षो! अपि चानुत्पाद उत्पद्यते वा निरुध्यते वा संक्लिश्यते वा व्यवदायते वा। आह नो हीदं भगवन्।

भगवानाह— तत् किं मन्यसे भिक्षो अपि चानुत्पन्ना धर्मा नरकं वा गच्छन्ति तिर्यग्योनिं वा यमलोकं वा गच्छन्ति। आह— उत्पाद एव तावद्भगवन् नास्ति कुतः पुनर्दुर्गतिगमनम्।

भगवानाह— एवं प्रभास्वरा भिक्षो सर्वधर्मा बालपृथग्जना अभूतं कल्पयित्वा वितथं कल्पयित्वा रिक्तं तुच्छं शून्यं कल्पयित्वा [नरकं वा] तिर्यग्योनिं यमलोकं वा गच्छन्ति। तत् किं भिक्षवो न मया धर्मो देशितश्चित्तसंक्लेशात् सत्त्वाः संक्लिश्यन्ते चित्तविशुद्ध्या विशुद्ध्यन्ते।

(2)

[3]तत् किं मन्यसे भिक्षो तच्चित्तं स्वप्नं स्वप्नान्तर्गतः संकल्पयेद् रागमध्यायन्तं न संजानासि। आह— संजानामि। भगवानाह—तत् किं भिक्षो चित्तेन रागमध्यायन्तं संजानासि। आह— एवं भगवन्। आह— तत् किं मन्यसे भिक्षो विशेषं किं नानाकरणं पश्यसि स्वप्नचित्तस्य अन्यचित्तस्य च। आह— नाहं भगवन्। किं चित्तं नानाकरणं स्वप्नचित्तस्य अन्यचित्तस्य वा समनुपश्यामि। आह— तत् किं मन्यसे भिक्षो मया स्वप्नोपमो धर्मो देशितः। आह— एवं भगवन्।

---

1. च० मे० प्र०, पृ० 44
2. च० मे० प्र०, पृ० 53-54
3. च० मे० प्र०, पृ० 59

## सर्वकल्पसमुच्चय

[1]गृहीत्वा हृदयं शुद्धं वज्रदेहविभावना ।
दृढं सारमसौशीर्यं वज्रकायं स लब्धवान् ।।

## श्रीसर्वबुद्धसमायोगडाकिनीजालसंवरनय

[2]कोटाक्षः कोटवः कोटाः कोटाभश्च कोटीरकः ।
कोलाक्षः कोलवः कोलः कोलाभश्च कलिस्तथा ।

## श्रीसर्वबुद्धसमायोगडाकिनीजालसंवरमहायोगतन्त्र

(1)

[3]न योगः प्रतिबिम्बेषु निषिक्तादिषु जायते ।
बोधिचित्तमहायोगयोगिनस्तेन देवताः ।।

आत्मा वै सर्वबुद्धत्वं सत्त्वसौरित्वमेव च ।
स्वाधिदैवतयोगेन तस्मादात्मैव साधयेत् ।।

(2)

[4]अथातः संप्रवक्ष्यामि सर्वतो विश्वमुत्तमम् ।
सर्वबुद्धसमायोगडाकिनीजालसंवरम् ।।

रहस्ये परमे रम्ये सर्वात्मनि सदा स्थितः ।
सर्वबुद्धमयः श्रीमान् वज्रसत्त्वोदयः सुखः ।।

---

1. च० मे० प्र०, पृ० 73
2. च० मे० प्र०, पृ० 24
3. च० मे० प्र०, पृ० 19
4. च० मे० प्र०, पृ० 82-83

तथागतमहादिव्यरत्नजालाद्यलङ्कृतम् ।
ततो घण्टावसंसक्तवितानविततोज्ज्वले ।।

वज्रगीतिं च पूजां च गीतवाद्यैर्विकुर्वितम् ।
पुष्पधूपादियोगेन दीपगन्धादिभिस्तथा ।।

प्रसाधयन्ति भवने सोद्यानादिषु वा पुनः ।
सर्वबुद्धसमायोगडाकिनीजालसंवरम् ।।

तत्रासनं निवेश्यादौ मृदुसंस्पर्शजं सुखम् ।
विश्वपद्मपटच्छन्नं सर्वशुद्धासनं हि तत् ।।

सर्वबुद्धसमायोगं योगेश्वरविकुर्वितम् ।
श्रीवज्रसत्त्वरूपास्तु विकुर्वन्ति हि यत्र( तत्तु ) वै ।।

सर्वधातुमयी( यो ) वापि जीवमूलमयस्तथा ।
स्वाधिदैवत्प्रतिमुखैः सिद्धिमुद्राप्रवर्तनम् ।।

निषिक्तां घटितां वापि( भि )संस्कृतां वा सुचित्रिताम् ।
विचित्रप्रतिबिम्बां च चिह्नमुद्रां प्रकल्पयेत् ।।

तदासनेषु प्राणसर्वान् यथास्थानं हि विन्यसेत् ।
चतुरस्त्रं चतुर्द्वारं चतुस्तोरणमण्डितम् ।
वज्ररत्नपद्मादि तु द्वारपालेन योजयेत् ।।

स्वाधिदैवत्प्रतिमुखैः सुप्रसाधितयोषितम् ।
स्वमुद्राचिह्नसुभगां कल्पयेद् गणमण्डलम् ।।

## सर्वधर्माप्रवृत्तिनिर्देशसूत्र

[1]शब्दरुतप्रवेशप्रतिष्ठो देवपुत्र बोधिसत्त्वो महासत्त्वः। स चेद् गङ्गानदीबालुका-समानकल्पानाकृष्येत् परिभाषेत् वितथैरसद्भूतैः पादैर्न तस्य तत् प्रतिघचित्तमुत्पद्येत, स चेद्

1. च० मे० प्र०, पृ० 36

गङ्गानदीबालुकासमानकल्पान् सत्क्रियेत गुरूक्रियेत मान्येत पूज्येत सर्वसुखोपधानैश्चीवर-पिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैर्न तस्य तत्रानुतापचित्तमुत्पद्येत् ।।

## सर्वदेवसमागमतन्त्र

(1)

[1]द्वयेन्द्रियसमापत्त्या व्यायामविधिरन्तरे ।
हर्षचित्तं मुनेः सिद्धौ महासुखमिति स्मृतम् ।।

(2)

[2]निर्वाणाग्निमहाघोरे भस्मोऽपि न मुच्यते ।
न तत्र विद्यते तत्त्वं नेन्द्रियार्था न धातवः ।।

## सर्वरहस्यतन्त्र

(1)

[3]पञ्चात्मकं पञ्चभिरेव भूतैर्दृष्टं नराणां नियतं शरीरम् ।
तद्भावभावैर्नियतं स्वचित्तं प्रभावयन्तः प्रभवन्ति बुद्धाः ।।

(2)

[4]फलेन हेतुमामुद्र्य फलमामुद्र्य हेतुना ।
विभाव्यमन्यथासिद्धिं कल्पकोटिर्न जायते ।।

## (श्री) संवर

(1)

[5]अतः सुखं सुखेनैव सर्वबुद्धत्वमाप्यते ।

---

1. च० मे० प्र०, पृ० 95
2. च० मे० प्र०, पृ० 99
3. च० मे० प्र०, पृ० 18
4. च० मे० प्र०, पृ० 77
5. च० मे० प्र०, पृ० 81

(2)

[1]प्रत्यहं प्रतिमासं वा प्रतिसंवत्सरं तथा ।
यथाधिष्ठानतो वाऽपि नाटयेद् बुद्धसंवरम् ।।इति।।

उत्थितो वा निषण्णो वा चंक्रमन् वा यथास्थितः ।
प्रहर्षन् वा जल्पन् वा यत्र तत्र यथा तथा ।।इति।।

यद्यदिन्द्रियमार्गत्वं यायात्तत्तत्स्वभावतः ।
असमाहितयोगेन सर्वबुद्धमयं वहेत् ।।इति।।

खसमं खसमाकारमपर्यन्तसागरोपमम् ।
रागधर्मनयो द्वेषो विलासः क्रीडाविस्तरः ।।

गृहीतं वस्तुमात्रं च शिष्यबोधनकारणात् ।
कति जन्मान्तरं वक्तुं सह्यते रागदेशना ।।

•

1. च० मे० प्र०, पृ० 89-90

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—ठिनलेराम शाशनी—

[ इस स्तम्भ के अन्तर्गत धी: शोध पत्रिका के पूर्व अंकों में अनेक बौद्ध-तन्त्र ग्रन्थों से पारिभाषिक शब्दों की व्याख्याओं को संकलित किया गया है। किन्तु, बीच के कई अंकों में सामग्री के अभाव में इस स्तम्भ को निरन्तर बनाये रखना सम्भव नहीं हुआ। सम्प्रति दुर्लभ बौद्ध ग्रन्थ शोध अनुभाग से गुह्यसमाज की आर्य-परम्परा से सम्बद्ध आचार्य आर्यदेव विरचित चर्यामेलापकप्रदीप का प्रकाशन हुआ है। यह ग्रन्थ पञ्चक्रम की अर्थव्याख्या के रूप में भी विख्यात है। प्रस्तुत अंक में इसी ग्रन्थ से उपर्युक्त शीर्षक के अन्तर्गत सामग्री संकलन कर प्रस्तुत की जा रही है। ]

**अकार:**

.....शब्दस्तावदालिकालिमय:। आलीत्यकारादिषोडशस्वरा:। कालीति ककारादि-वर्णास्त्रयस्त्रिंशत्। कथं षोडशस्वरसंयुक्तम् एकोनपञ्चाशल्लिपिकं सर्वमस्तव्यस्तसमस्तस्वर-व्यञ्जनबिन्दुविसर्गसंहिताधातुविभक्तिसमासपदविग्रहस्त्रिलिङ्गतिङन्तकृत्तद्धितप्रत्ययादिभिर्भाष्य-पर्यन्तं व्याकरणमिति नामसङ्केतकेन परिभाषमाणेन ज्ञायते। अतस्तस्य पदवाक्यछन्दोवृत्ति-श्लोकगाथादण्डकादिभिश्चतुरशीतिसहस्रधर्मस्कन्धसूत्रान्ततन्त्रकल्पत्रिपिटककाव्यनाटकादयो लौकिकलोकोत्तरशास्त्राणि सम्भाव्यन्ते। शास्त्रमाश्रित्य सर्वसिद्धय: सम्पद्यन्ते। .......किन्तु तेषां पदवाक्यादिगतवर्णविशेषाणां विज्ञानभूतोऽयमकार:। यस्मादकारस्वरवियुक्तानि सन्ति ककारादयो वर्णा फलं तत्त्वात्र भवन्ति वाच्या:। यथोक्तं भगवता नामसंगीतिकायाम्—

अकार: सर्ववर्णाग्र्यो महार्थ: परमाक्षर: ।
महाप्राणो ह्यनुत्पादो वागुदाहारवर्जित: ।
सर्वाभिलापहेत्वग्र्य: सर्ववाक्सुप्रभास्वर: ।। इति।।

(द्र०-ना० सं० 4.1-2)

तेनोक्तं भगवता सकलध्यानमुखबीजपदम्। "अकारो मुखं सर्वधर्माणामाद्यनुत्पन्न-त्वाद्" इति। सहजाक्षरं तु पुनरुच्यते। वज्रमण्डालङ्कारतन्त्रेऽप्यकारं द्योतयन्नाह—

ज्वलन्तं दीपसदृशं हृदि मध्यमनाहतम् ।
अक्षरं परमं सूक्ष्मम् अकारं परमं प्रभुम् ।। इति।।

(द्र०-ना० सं० टी०, पृ० 20)

एवं सर्वतथागता अकारान्वयमकारहेतुभूतमकारनिर्जातमुच्चरितप्रध्वंसिस्वभावं वाग्विकल्पलक्षणं यथाभूतं ज्ञात्वा शब्दापशब्दनिरपेक्षं सर्वाशयानुभेदेन विनेयजनेभ्यो धर्मं देशयन्तीति। (च० मे० प्र०, पृ० 30-31)

शब्दो अकारोद्भवत्वादक्षरः। क्षरं विनाशोऽक्षरमविनाशः। (च० मे० प्र०, पृ० 32)

**अधिष्ठानयोगः**

प्रकृतिसिद्धोऽहमित्यात्मना दार्ढ्यमुत्पाद्य त्रिवज्राभेद्यात्मानं महावज्रधरमधिमुञ्चेदिति अधिष्ठानयोग इत्युच्यते। (च० मे० प्र०, पृ० 20)

**अध्यात्माभिसंबोधिः**

तदेव प्रत्यात्मवेद्यं कायवाक्चित्तरहितं परमार्थसत्यमध्यात्माभिसंबोधिरित्युच्यते।
(च० मे० प्र०, पृ० 98)

**अपानः ( वायुः )**

वातमूत्रपुरीषाणां शुक्रादीनां तथैव च ।
अपनयनादपानोऽयं योगिभिर्लक्ष्यते सदा ।। (च० मे० प्र०, पृ० 13)

**अब्धातुः ( पञ्चधा )**

मामकीसमाधिमधिकृत्याह— तत्र अब्धातुसमूहो मामकी। स पुनः पञ्चतथागतैर-धिष्ठितः। श्लेष्मादिजलं वैरोचनस्याधिष्ठानम्, मूत्रमक्षोभ्यस्याधिष्ठानम्, स्वेदो रत्नसम्भवस्या-धिष्ठानम्, रक्तममिताभस्याधिष्ठानम्, लालाऽमोघसिद्धेरधिष्ठानमिति।

बाह्यमपि पञ्चाकारेण दृश्यते। तत्र समुद्रोदकमक्षोभ्यस्य, नद्युदकं रत्नसम्भवस्य, स्वभ्रोदकममिताभस्य, तडागोदकममोघसिद्धेः, निर्झरोदकं वैरोचनस्याधिष्ठानमिति। उक्तः पञ्चधा अब्धातुः। (च० मे० प्र०, पृ० 12)

**अभिषेकक्रमः**

मालासलिलसंबुद्धवज्रघण्टाऽथ दर्पणम् ।
नामाचार्यमनुज्ञात अभिषेकक्रमो ह्ययम् ।। (च० मे० प्र०, पृ० 63)

**अभिसंबोधिक्रमः ( द्विविधः )**

तत्र द्विविधोऽभिसंबोधिक्रमो यदुत बाह्य आध्यात्मिकश्च। बाह्यं तावन्निर्दिश्यते-प्रत्यूषसन्ध्यायामविद्याताम्रस्या(तामरसा)भासं यावद् वैरोचनो न स्पृ(स्प)ष्टोऽस्मिन् प्रभास्वरनिर्मलाकारं स्वच्छं कायवाक्चित्तरहितं सर्वशून्यलक्षणम्। वैरोचनोदये आलोकाभासम्। अस्तमनसंध्यायाम् अविद्या। निशाकरोदये आलोकम्। एवं शून्यचतुष्टयस्य बाह्यनिदर्शनं प्रतिपाद्य इदानीमध्यात्माभिसंबोधिं प्रत्यात्मवेद्यलक्षणं दर्शयत्यनेन क्रमेण। तत्रायं क्रमः—प्रथमं मरीचिकाकारं पञ्चरश्मिपुञ्जं पश्येत्, द्वितीयमालोकं चन्द्ररश्मिनिभम्, तृतीयमालोकाभासं सूर्यरश्मिनिभम्, चतुर्थं तामरसाकारमालोकोपलब्धकम्। ततस्तमोपगते क्षणात् प्रभास्वरमतिस्वच्छं सततालोकस्वभावं परमार्थसत्यं स्वलक्षणं ज्ञानचक्षुषा पश्येत्।

(च० मे० प्र०, पृ० 63-64)

**आकाशः**

आकाशं चातीन्द्रियत्वादसंस्कृतत्वाच्च न महाभूतं किन्तु अवकाशदानात्सर्वभावान्तमाकाशः। अनावरणकृत्यं करोतीति यावत्। (च० मे० प्र०, पृ० 13)

**आलोकोपलब्धज्ञानस्य प्रकृतिः ( सप्तक्षणाः )**

आलोकोपलब्धज्ञानस्य प्रकृतिः। यदुत मध्यमरागः विस्मृतिः भ्रान्तिः तूष्णीं खेद आलस्यं धन्धत्वमस्य सप्त क्षणाः। (च० मे० प्र०, पृ० 44)

**उदानः ( वायुः )**

ऊर्ध्वगमात् संहरणाद् भक्ष्यभोज्यादिभक्षणात् ।
उदानकर्मविज्ञोऽयं ज्ञानेन सह योगतः ।। (च० मे० प्र०, पृ० 13)

**उपायज्ञानस्य प्रकृतिः ( चत्वारिंशत् क्षणाः )**

उपायज्ञानस्य प्रकृतिः। यदुत रागं रक्तं तुष्टं मध्यमतुष्टम् अतितुष्टं हर्षणं प्रामोद्यं विस्मयः हसितं ह्लाद आलिङ्गनं चुम्बनं चूषणं धैर्यं वीर्यं मानः करणं हरणं बलम् उत्साहं साहसं मध्यमसाहसम् उत्तमसाहसं रौद्रं विलासं वैरं शुभं वाक्स्फुटं सत्यम् असत्यं निश्चयं निरुपादानं दातृत्वं चोदनं शौर्यम् अलज्जा धूर्तत्वं दुष्टं हठं कौटिल्यमिति चत्वारिंशत् क्षणाः।

(च० मे० प्र०, पृ० 44)

**कर्मपथाः ( त्रीणि दुश्चरितानि )**

तत्र दश कुशलाः कर्मपथास्तद्विपर्ययादकुशलकर्मपथाः। एते कर्मपथाः कायवाक्-चित्तसमुद्भवा इत्युक्तं भगवता वज्रोष्णीषतन्त्रे तदवतार्यते—"भगवानाह- शृणु गुह्यकाधिपते त्रिविधं कायदुश्चरितम्, चतुर्विधं वाग्दुश्चरितम्, त्रीणि चित्तदुश्चरितानि, ततो नरकपातं भवति। वज्रपाणिराह- भाषतु भगवान् भाषतु सुगतः। कतिविधं कायप्रभेददुश्चरितम्, वाग्प्रभेद-दुश्चरितम्, चित्तप्रभेददुश्चरितमिति।

भगवानाह— तदेव गुरुसामान्यं गुह्यकाधिपते दुश्चरितम्। मातापितृगुरुजनप्रभृतीनां ताडनं घातनं गुरुदुश्चरितम्। प्राणातिपातप्रभृतयोऽकुशलकर्मपथाः सामान्यदुश्चरितम्। वाग्दु-श्चरितं यदुत सद्धर्मप्रतिक्षेपादेव पारुष्यवचनं तदेव दुश्चरितं वाक्यम्। मातापितृगुरुप्रभृतीनां पारुष्यवचनं गुरुदुश्चरितं वाक्यं क्वचित् पुद्गलानां श्रद्धाप्रतिपत्तिकुशलानां कथाप्रसङ्गेन नास्ति परलोक इत्युदारवचनाल्लोकोत्तरमृषावादं कुशलकर्मविघ्नं कुर्वन्ति। संभिन्नप्रलापं [पारुष्यम-कुशलकर्मपथाः] सामान्यवाग्दुश्चरितम्। चित्तदुश्चरितं यदुत प्रथमस्त्यानं तदेव प्रकृतिश्चित्त-प्रकृतिदुश्चरितम्, [चित्तोद्धूतप्रकृतिदुश्चरितमविद्या प्रकृति] दुश्चरितम्।

वज्रपाणिराह—भाषस्व भगवान् भाषस्व सुगत चित्तचैतसिकाऽविद्यादुश्चरितानि। भगवानाह— शृणु गुह्यकाधिपते विघातेन चित्तं विरक्तेन चित्तं दशकुशलकर्मपथे विरक्तं तदेव दुश्चरितचित्तम्। मददर्पाहङ्कारक्रोधसत्त्वनाशनं रागचित्तपरदाराऽऽसक्तिपरद्रव्यापहरणम्। गुरु-जनं प्रति कुटिलचित्तं चित्तदुश्चरितम्, चैतसिकं दशकुशलकर्मपथषट्पारमिताविक्षिप्तविस्मृति-र्द्वन्द्वाङ्कितवदनो मनसान्धकारतयाऽविद्या सामान्यदुश्चरितमिति"। (च० मे० प्र०, पृ० 49-50)

**कुलम्**

कुलाः शतविधाः प्रोक्ताः संक्षेपेण तु पञ्चधा ।
पुनस्त्रिविधतां यान्ति कायवाक्चित्तभेदतः ।।

इति श्रीगुह्येन्दुतिलके वचनात्। (च० मे० प्र०, पृ० 9)

**कुलम् ( त्रिविधम् )**

रत्नसम्भवः कायवज्रेण सहाद्वयो भवति। अमोघसिद्धिर्वाग्वज्रेण सहाद्वयो भवति। अक्षोभ्यः षष्ठतथागतेन सहाद्वयो भवति। एवं शतकुलमारभ्य यावत् पञ्चकुलात्मका बुद्ध-बोधिसत्त्वाः स्वकायवाक्चित्ते संग्रहं गच्छन्ति। (च० मे० प्र०, पृ० 18)

### कुलम् ( पञ्चधा )

चत्वारो धातवः शरीरपिण्डमभिनिर्वर्तयन्ति। धातुसमवायाद् भौतिकाः भवन्ति। तस्माद् ये रूपस्कन्धादिभौतिकास्तथागतकुलीनास्ते पृथिवीधातौ संग्रहमुपयान्ति। एवं रत्नसम्भवकुलीनास्तेऽब्धातौ, पद्मकुलीनास्तेजोधातौ, कर्मकुलीना वायुधातौ, वज्रकुलीना विज्ञानधातौ संगृहीता भवन्ति। (च० मे० प्र०, पृ० 17)

### कायायतनम् ( पञ्चधा )

कायायतनसमूहः सर्वनीवरणविष्कम्भी। तत्र समस्तकायपरमाणुसञ्चयरूपकायेन्द्रियं तद् वैरोचनस्य, अस्थिस्वभावो रत्नसम्भवस्य, मांसस्वभावोऽमिताभस्य, चर्मस्वभावोऽमोघसिद्धेः, स्पर्शत्रयग्रहणमक्षोभ्यस्याधिष्ठानमिति। उक्तं पञ्चधा कायायतनम्। (च० मे० प्र०, पृ० 14)

### गन्धविषयः ( पञ्चधा )

संवाहः घ्राणमाश्रित्य पञ्चधा गन्धक्रियां करोति। तत्राशेषगन्धो वैरोचनस्य, सर्वाङ्गगन्धो रत्नसम्भवस्य, गन्धत्रयममिताभस्य, रसगन्धोऽमोघसिद्धेः। विषयगन्धो अक्षोभ्यस्याधिष्ठानमिति। उक्तः पञ्चधा गन्धविषयः। (च० मे० प्र०, पृ० 16)

### घ्राणायतनम् ( पञ्चधा )

घ्राणायतनसमूहो आकाशगर्भः। घ्राणान्तरेऽञ्जनशलाकाकारपरमाणुसञ्चयरूपं घ्राणेन्द्रियं तदक्षोभ्यस्य, घ्राणस्वभावो वैरोचनस्य, मध्यान्तरं रत्नसम्भवस्य, नासापुटोऽमोघसिद्धेः, गन्धत्रयग्रहणममिताभस्याधिष्ठानमिति। उक्तं पञ्चधा घ्राणायतनम्। (च० मे० प्र०, पृ० 14)

### चक्षुरायतनम् ( पञ्चधा )

इदानीं क्षितिगर्भादिमहाबोधिसत्त्वानां समाधिमधिकृत्याह— तत्र चक्षुरायतनसमूहः क्षितिगर्भः। स पुनः पञ्चाकारैर्विभज्यमानः पञ्चतथागतैरधिष्ठितः। तत्र चक्षुर्गोलकाभ्यन्तरे द्राक्षाफलप्रमाणं चक्षुरिन्द्रियं तदक्षोभ्यस्य, तारकास्वभावो रत्नसंभवस्य, तिर्यग्रूपममिताभस्य, दृष्टिसञ्चलनममोघसिद्धेः, रूपत्रयग्रहणं वैरोचनस्याधिष्ठानमिति। उक्तं पञ्चधा चक्षुरायतनम्।

(च० मे० प्र०, पृ० 14)

**चतुर्महाभूतम्**

पृथिवी लोचना ख्याता अब्धातुर्मामकी स्मृता ।
तेजः पाण्डरा ख्याता वायुस्तारा प्रकीर्तिता ।।

(च० मे० प्र०, पृ० 13)

**जिह्वायतनम् ( पञ्चधा )**

जिह्वायतनसमूहो लोकेश्वरः। तत्र परमाणुसञ्चयरूपमर्धचन्द्राकृतिजिह्वेन्द्रियं तदक्षोभ्यस्य, जिह्वास्वभावो वैरोचनस्य, जिह्वामूलं रत्नसंभवस्य, जिह्वाग्रममिताभस्य, रसत्रयग्रहणममोघसिद्धेरधिष्ठानमिति। उक्तं पञ्चधा जिह्वायतनम्। (च० मे० प्र०, पृ० 14)

**तत्त्वम् ( पञ्चधा )**

मन्त्रतत्त्वम्, मुद्रातत्त्वम्, आत्मतत्त्वम्, धर्मतत्त्वम्, देवतातत्त्वं च पञ्चक्रम.........।

(च० मे० प्र०, पृ० 2)

**तत्त्वम् ( भूतनयात्मकः समाधिः )**

यद् भूतं तत् तत्त्वम्। .....यदविसंवादकं तद् भूतम्। .....यो भूतनयात्मकः समाधिस्तदविसंवादकम्। ....यत्सत्यद्वयाद्वैधीकारलक्षणं तद् भूतनयात्मकः समाधिः। ....प्रथमं संवृतिसत्यं द्वितीयं परमार्थसत्यं च। ....भगवता वज्रोष्णीषतन्त्रे—वज्रपाणिराह— कथं भगवन् सर्वधर्माणामालयं परमार्थसत्यम्? भगवानाह— सर्वधर्मा गुह्यकाधिपते स्कन्धायतनात्मका जगत्स्थावरजङ्गमास्ते हि परमार्थसत्याश्रयाः, अस्थानयोगेन। परमार्थसत्यमनात्मकमनभिभूतं सर्वशून्यं न वृद्धिर्न परिहाणिः सुविशुद्धं खसमं निर्मलस्वभावमनक्षरमवाच्यं कायवाक्चित्तरहितं न तदस्ति, न च नास्ति, न चरति, न च न चरति, न दूरे, नासन्ने, न शून्यं नाशून्यं न मध्यमश्च, तदिदं परमार्थसत्यम्। अतस्तस्य परमगाम्भीर्यदुरवगाहस्यानुत्पादानिरोधस्य हेतुप्रत्ययोत्पन्नं संवृतिसत्यप्रत्ययम्। संवृतिसत्यं तावत् स्वप्नेन्द्रजालदर्पणप्रतिबिम्बवन्मायासमाधिः स्वलक्षणश्चतुर्ब्रह्मविहारहेतुः। ताभ्यां युगनद्धवाहिक्रमः सोऽयं भूतनयात्मकः समाधिः सत्त्वोपलम्भोपगमः। समस्तमेतत् तत्त्वम् इति। (च० मे० प्र०, पृ० 2-3)

**तथता**

महासन्ध्याव्याकरणमहायोगतन्त्रे—

रूपाद्याध्यात्मिकान् धर्मान् पश्येत् विपश्यनोच्यते ।
अक्षोभ्यादियथासंख्यं कल्पयेत् शमथो भवेत् ।।

अनयोर्निःस्वभावत्वात् तथता शान्तसंज्ञकम् ।
तथतामण्डले योगी सर्वबुद्धान् प्रवेशयेद् ।। इति।।

(च० मे० प्र०, पृ० 98)

**तथागतकायः ( वज्रकायः )**

श्रीगुह्यसमाजयोगतन्त्रे सर्वतथागता वर्णयन्ति—

अहो वज्र अहो वज्र अहो वज्रस्य देशना ।
यत्र न कायवाक्चित्तं तत्र रूपं विभाव्यते ।। इति।।

(गु० स० 17.38)

भट्टारकपादेनाप्युक्तम्—

सौशीर्यं नास्ति ते काये मांसास्थिरुधिरं न च ।
इन्द्रायुधमिवाकाशे कायं दर्शितवानसि ।।
नामयो नाशुचिः काये क्षुत्तृष्णासंभवौ न च ।
त्वया लोकानुवृत्त्यर्थं दर्शिता लौकिकी क्रिया ।। इति।।

(प० क्र० 3.2-3; नि० स्त० श्लो० 18-19)

सर्वकल्पसमुच्चयेऽप्याह—

गृहीत्वा हृदयं शुद्धं वज्रदेहविभावना ।
दृढं सारमसौशीर्यं वज्रकायं स लब्धवान् ।। इति।।

समाधिराजसूत्रे (पृ० 313) चन्द्रप्रभकुमारेणापि तथागतकायो वर्णितः—

खसमा विरजा वररूपधरा
अशरीर अलक्षण प्रज्ञसुता ।
सुगम्भीरगुणोदधि कारुणिका
दद मूर्ध्नि पाणि मम अप्रतिमा ।। इति।।

(च० मे० प्र०, पृ० 72-73)

**तेजोधातुः ( पञ्चधा )**

पाण्डरवासिनीसमाधिमधिकृत्याह— तेजोधातुसमूहः पाण्डरवासिनी, स पुनः पञ्चतथागतैरधिष्ठितः। शीर्षोष्णं वैरोचनस्याधिष्ठानम्, हृदयोष्णमक्षोभ्यस्य, नाभ्युष्णं रत्नसम्भवस्य, सर्वाङ्गोष्णममिताभस्य, उदरोष्णममोघसिद्धेरधिष्ठानमिति।

बाह्यमपि पञ्चाकारेण दृश्यते। तत्राहवनीयाऽग्निरक्षोभ्यस्य, पाषाणोद्भवाग्निर्वैरोचनस्य, सूर्यकान्तोद्भवाग्नी रत्नसम्भवस्य, काष्ठोद्भवाग्निरमिताभस्य, दावाग्निरमोघसिद्धेरधिष्ठानमिति। उक्तः पञ्चधा तेजोधातुः। (च० मे० प्र०, पृ० 12)

**त्रयो विषाः**

रागो द्वेषश्च मोहश्च एते त्रयो विषा इत्युक्तम्। (च० मे० प्र०, पृ० 79)

रागादयः क्लेशाः श्रावकाद्युपलम्भदृष्टीनामपायहेतुका भवन्ति, क्लेशस्वभावाऽपरिज्ञानात्। स्वभावपरिज्ञानात्तु बोधिहेतुका भवन्तीति भगवतैव सूत्रके निर्दिष्टम्। यथोक्तं श्रीपरमाद्यमहायोगतन्त्रे—

रागो द्वेषश्च मोहश्च त्रय एते विषङ्गताः ।
विषत्वमुपयान्त्येव विषमेण तु सेविताः ।
अमृतत्वं पुनर्यान्ति अमृतेन तु सेविताः ।। इति।।

(च० मे० प्र०, पृ० 80)

**दशवायवः**

दश वायून् प्राह वज्रमुखीमहायोगतन्त्रे— यदुत प्राणापानोदानसमानव्यानोद्वाहविवाहसंवाहनिर्वाहप्रवाहश्चेति। तत्र प्राणादिपञ्चवायवः पञ्चस्कन्धमाश्रित्य स्कन्धव्यापारं कुर्वन्ति। उद्वाहादिपञ्चवायव इन्द्रियमाश्रित्येन्द्रियव्यापारं कुर्वन्ति। (च० मे० प्र०, पृ० 15)

प्राणापानसमानाख्यानुदानव्यानसंज्ञकान् ।
नागकूर्मकृकरांश्च देवदत्तधनञ्जयान् ।
कृत्वैतदात्मनो बिम्बं स्त्रीतत्त्वं निर्माय ते पुनः ।। इति।।

एते दशवायवः श्रीसर्वबुद्धसमागमयोगडाकिनीजालसंवरनये येन येन रुतेन उक्ता-स्तांस्तानप्याह—

कोटाक्षः कोटवः कोटाः कोटाभश्च कोटीरकः ।
कोलाक्षः कोलवः कोलः कोलाभश्च कलिस्तथा ।।

एतानि दश नामानि वज्रमुखीमहायोगतन्त्रेऽपि यथारुतार्थेन दशवायून् प्राह—प्राणापानोदानसमानव्यानोद्वाहविवाहसंवाहप्रवाहनिर्वाहाश्चेति। पञ्चवायवः कायविभागे स्थित्वा कायव्यापारं कुर्वन्ति। पञ्चवायवश्चक्षुराद्यायतने स्थित्वा इन्द्रियव्यापारं कुर्वन्ति। तत्र प्राणो हृदयस्थोऽक्षोभ्यस्तथागतः। अपानो गुदस्थो रत्नसम्भवस्तथागतः। उदानः कण्ठ-स्थोऽमिताभस्तथागतः। समानो नाभिस्थोऽमोघसिद्धिस्तथागतः। व्यानः सर्वसन्धिस्थो वैरोचन-स्तथागतः इति। उद्वाहो रूपम्, विवाहः शब्दः, संवाहो गन्धः, प्रवाहो रसः, निर्वाहः स्पर्शश्चेति।

एते दशवायवः पुनरुच्छ्वासप्रश्वासा भवन्ति। ते च पुनर्वायव्यादि चतुर्मण्डलात्मका भवन्ति। ते च पुनश्चतुर्देव्यात्मका भवन्ति। ते च पुनः पञ्चभूतात्मका भवन्ति। ते च पुनरादर्शादिपञ्चज्ञानात्मका भवन्ति। ते च पुनः सितादिपञ्चरश्म्यात्मका भवन्ति। ते च पुनः पञ्चतथागतात्मका भवन्ति। ते च पुनस्त्र्यक्षराधारा भूत्वा प्रवेशस्थितिव्युत्थानक्रमेण वज्रजापं कारयन्ति। ते च पुनरनाहतं व्याप्य निःस्वभावा भवन्ति। (च० मे० पृ०, पृ० 25)

## दुष्करचर्या

अतो विशिष्टात् कारणाद्विशिष्टमेव कार्यमुत्पद्यते। एवमेव रूपादयो विषयपरिभोग-भावमापद्यमाना विशिष्टफलवाहका भवन्तीत्यवगन्तव्याः। अन्यथा दुष्करचर्या चित्तस्यैकाग्रता न भवति, पञ्चेन्द्रियनिग्रहत्वात्। यथोक्तं भगवता श्रीपरमाद्यमहायोगतन्त्रे—

दुष्करैर्नियमैस्तीव्रैर्मूर्तिः शुष्यति दुःखिता ।
दुःखात् विक्षिप्यते चित्तं विक्षेपात् सिद्धिरन्यथा ।। इति।।

मूलसूत्रेऽ(द्र०-गु० स० 7.3)प्याह—

दुष्करैर्नियमैस्तीव्रैः सेव्यमानो न सिद्ध्यति ।
सर्वकामोपभोगैस्तु सेवयंश्चाशु सिद्ध्यति ।। इति।।

(च० मे० प्र०, पृ० 79)

**धातवः ( चत्वारः )**

चतुर्धातुमधिकृत्याह— तत्र पृथिवीधातुः कतमः? यद् गुरुत्वं कक्खटत्वं स च धारणकर्मा। तत्राब्धातुः कतमः? यत् प्रबन्धं स्नेहता संग्रहकर्मा। तत्र कतमस्तेजोधातुः? यदुष्णत्वं परिपाचनत्वं शोषणकर्मा। तत्र कतमो वायुधातुः? यदाकुञ्चनप्रसारणमुच्छ्वासप्रश्वास-लघुसमुदीरणत्वं तद् वायुधातुः। एवं महायानक्रमेण चतुर्णां धातूनां स्वस्वलक्षणं व्यव-स्थाप्य.......। (च० मे० प्र०, पृ० 11)

**निर्वाणम्**

आर्याष्टसाहस्रिकायामप्याह—निर्वाणं मायोपमं स्वप्नोपममिति वदामि, निर्वाणादन्यः कश्चिद् विशिष्टतरो धर्मः स्यात् तमप्यहं मायोपमं स्वप्नोपममिति वदामि (अ० सा० प्र०, पृ० २०)। अथ तस्यैव विशेषणम्। न च रूपं न चारूपं न सत्यं न च मृषेति। एवं न भावो नाप्यभावो नोच्छेदो नापि शाश्वतो न साकारो न निराकारो न धर्मो नाधर्मो न संक्लेशो न व्यवदानं न संसारो न निर्वाणं न नित्यो नानित्यो नात्मा नानात्मा नापरात्मा नाध्यात्मा न बहिर्धा न लौकिकं न लोकोत्तरं न द्वयं नाद्वयमिति। (च० मे० प्र०, पृ० 73)

**पञ्च ज्ञानानि**

पञ्चज्ञानमधिकृत्याह— आदर्शे प्रतिबिम्बदर्शनमिव युगपत् सकलपदार्थपरिज्ञानमा-दर्शज्ञानं तद् वैरोचनस्य, अपदद्विपदचतुष्पदबहुपदादि बहूनामपि सत्त्वानां चित्तमात्रतेत्येका-कारावगमः समताज्ञानं तद् रत्नसम्भवस्य, स्कन्धधात्वादिबाह्याध्यात्मिकपदार्थान् पृथक् पृथग् विभज्य प्रविवेच्य सर्वं बुद्धमयमिति ज्ञात्वा सर्वधर्मान्' बहव इति पद्मदलवत् प्रत्यवेक्ष्य निराशङ्केन विहरणं प्रत्यवेक्षणाज्ञानं तदमिताभस्य, स्वपरार्थक्रियाकायवाक्चित्तव्यापार-निष्पादनस्वभावं कृत्यानुष्ठानज्ञानं तदमोघसिद्धेः, कायवाक्चित्तावरणसंशोधनं कर्मक्लेश-विनिर्मुक्तं शुभाशुभादिविकल्पवासनासंशोधनं सुविशुद्धधर्मधातुज्ञानं तदक्षोभ्यस्याधिष्ठान-मिति। (च० मे० प्र०, पृ० 16-17)

**परमार्थसत्यम् ( नामपर्यायाः )**

इदानीं वाक्याभिनिविष्टानां भ्रान्त्यपनयनार्थं परमार्थसत्यं नामपर्यायः कश्चिद-वतार्यते— प्रथमं तावत् प्रभास्वरं सर्वशून्यं बुद्धज्ञानं वज्रज्ञानम् अनुत्तरज्ञानं निर्मलं निःस्वभावं निराभासं निरात्मकं निर्वाणं निःसत्त्वं निर्जीवं निष्पुद्गलं निर्लेपम् अनुत्पन्नम् अनिरोधम्

अनक्षरम् अवाच्यम् अनुपलम्भम् अनुत्तरम् अनभिलाप्यम् अचिन्त्यम् अनन्तम्, असंख्यम् अतीन्द्रियम् अनालयम् अलक्षणम् अनभिसंस्कृतम् अनिमित्तम् अचलम् अनालम्बनम् अविज्ञेयम् अप्रतर्क्यम् अक्षयम् [अवृद्धिकम्] अवाच्यम् अनावरणम् एकनयं शिवं शान्तं खसमं स्वभावशुद्धम् अनादिम् अमध्यम् अनवसानं न गतं नागतं न दूरं नासन्नं नैकं नानेकं दुःस्पर्शं दुर्विभाव्यं ध्यानभूतं धर्मकायः भूतकोटिः असङ्गकोटिः धर्मधातुः अमूर्तिः अरजम् अनन्तं सिद्धिः गुह्यसिद्धिः पारमिताविशुद्धिः दृष्टिविशुद्धिः हेतुविशुद्धिः फलविशुद्धिः त्रैधातुकविशुद्धिः पुण्यविशुद्धिः पापविशुद्धिः क्लेशविशुद्धिः कर्मविशुद्धिरिति। प्रज्ञापारमिता सर्वबुद्धमाता [सर्वज्ञता] सर्वाकारज्ञता मार्गाकारज्ञता तथता अवितथता समता अक्षयपुण्य-ज्ञानसम्भारः संस्कृत्या(ता) ज्ञानवाहिनी सर्वबोधिसत्त्वजननी सर्वश्रावकधात्री सर्वप्रत्येकबुद्ध-जनयित्री सर्वलोकधात्री दिव्यचक्षुविशोधनकरी दिव्यश्रोत(त्र)प्रदानकरी परचित्तज्ञानपूर्व-निवासानुस्मरणकरी अनन्तर्द्धिकरी सर्वक्लेशक्षयंकरी चेति। (च० मे० प्र०, पृ० 64-65)

**परिनिर्वाणम्**

उक्तं च सुर्वणप्रभाससूत्रे (2.30)—

न बुद्धः परिनिर्वाति न धर्मः परिहीयते ।
सत्त्वानां परिपाकाय परिनिर्वाणं निदर्शयेत् ।। (च० मे० प्र०, पृ० 103)

**पर्यङ्कम्**

तथागतपर्यङ्कं वज्रपर्यङ्कं रत्नपर्यङ्कं पद्मपर्यङ्कं कर्मपर्यङ्कादिबन्धं बद्ध्वा कर्मस्थो भवति। (च० मे० प्र०, पृ० 86)

**पृथिवीधातुः (पञ्चधा)**

तत्र पृथिवीधातुसमूहो लोचना। स पुनः पञ्चाकारैर्विभज्यमानः पञ्चतथागतैरधिष्ठितः, यदुत केशास्थिविट्प्लीहहृदयं वैरोचनस्य, रोमनखौ पूयं हृदयं रत्नसम्भवस्य, दन्तत्वङ्-मांसहृदयममिताभस्य, स्नायुमार्ग(मांस)पार्श्वहृदयममोघसिद्धेः, मलाऽन्त्रपित्तहृदयमक्षोभ्यस्य। यथोक्तं वज्रमाले—

पञ्चहृदयमाश्रित्य पञ्चतनुविनिर्गतम् ।
पञ्चवायुसमायुक्तं पञ्चकामोपभोगकृत् ।। इति।।

एवं पुनः पृथिवीधातुर्बाह्योऽपि पञ्चाकारेण भिद्यते चतुर्द्वीपाः सुमेरुश्च। तत्र सुमेरुर्महावैरोचनस्य, पूर्वविदेहोऽक्षोभ्यस्य, जम्बूद्वीपो रत्नसम्भवस्य, अपरगोदानीयोऽमिताभस्य, उत्तरकुरुरमोघसिद्धेरधिष्ठानमिति, उक्तः पञ्चधा पृथिवीधातुः। (च० मे० प्र०, पृ० 11)

**प्रज्ञाज्ञानस्य प्रकृतिः ( त्रयस्त्रिंशत्क्षणाः )**

तत्र प्रज्ञाज्ञानस्य प्रकृतिस्तावद्विरागः, मध्यमविरागः, अतिविरागः, यन्मनोगतागतं शोकः, मध्यमशोकः, अतिशोकः, सौम्यम्, विकल्पम्, भीतम्, मध्यमभीतम्, अतिभीतम्, तृष्णा मध्यमतृष्णा, अतितृष्णा, उपादानम्, निःशुभम्, क्षुत्, तृष्णा, वेदना, समवेदना, अतिवेदना, विद, वित्, धारणापदम्, प्रत्यवेक्षणम्, लज्जा, कारुण्यम्, स्नेहः, मध्यमस्नेहः, अतिस्नेहः, साश्चर्यम्, सञ्चयः, मात्सर्यमिति त्रयस्त्रिंशत्क्षणाः। (च० मे० प्र०, पृ० 43)

**प्राणः ( वायुः )**

प्रक्रमणात् प्राणायामाच्चेन्द्रियद्वारैस्तन्तुभिः ।
प्रक्रमते सदा कालं प्राण इत्यभिधीयते ।। (च० मे० प्र०, पृ० 12)

**प्राणायामः**

वायुतत्त्वं नाम प्राणायामः। अतो वायुतत्त्वस्योद्देशपदं श्रीगुह्यसमाजादवतार्यते—

पञ्चवर्णं महारत्नं सर्षपस्थूलमात्रकम् ।
नासिकाग्रे प्रयत्नेन भावयेद् योगतः सदा ।इति। (गु० स० 3.12)

इदं वज्रपदं नेयनीतार्थभेदेन द्विविधं देवतायोगस्यापि युज्यते। तत्रोत्पत्तिक्रमभावको नासाग्रे सर्षपफलप्रमाणं स्वदेवताचिह्नं स्वचित्तदृढीकरणार्थं भावयेदिति सूक्ष्मयोगव्यपदेशः।

अनेनैव निष्पन्नक्रमसमाधिसमागतानां सूक्ष्मयोगमाह— आलिकालिभिः स्त्रीपुन्नपुंसकरूपेण त्र्यक्षरं निष्पाद्य, अक्षरत्रयमपि प्रवेश्य स्थितिव्युत्थाने नियोज्य चतुर्मण्डलक्रमेण प्राणायामात्मकं वज्रजापं कुर्यादिति। इममर्थं द्योतयन्नाह—

पञ्चज्ञानमयं श्वासं पञ्चभूतस्वभावकम् ।
निश्चार्य पद्मनासाग्रे पिण्डरूपेण कल्पयेत् ।
पञ्चवर्णं महारत्नं प्राणायाममिति स्मृतम् ।। इत्युक्तं समाजोत्तरे (3.12)
(च० मे० प्र०, पृ० 21-22)

**बोधिः**

श्रीवैरोचनाभिसम्बोधितन्त्रेऽप्याह—स्वचित्तस्य यथाभूतं परिज्ञानं बोधिः, इति।

(च० मे० प्र०, पृ० 38)

**भावनाविशुद्धिः**

इह सत्यद्वयाद्वये सति हेतुफलमप्यद्वयम्, हेतुफलाद्वये प्राप्यप्रापकमप्यद्वयम्, प्राप्य-प्रापकाद्वये भाव्यभावकमप्यद्वयम्, तदद्वये साधकसाधनसाध्यमपि नोपलभ्यते। तदनुपलम्भात्। कोऽत्र भावयति कोऽसौ चर्यायां चरतीति विचारणायां घटमानपरिनिष्पन्नायां नास्ति भेदः, "दृष्टे धर्मे च निर्वाणं कृतकृत्यं तदेव हि" इति वचनात्। तथाऽप्यवस्थाभेदं प्राप्य हेतुफलञ्च लोके दृश्यते, अथवा अहेतुकदोषप्रसङ्गः स्यात्।

अतो घटमानावस्थायां भावको भावना भाव्यः साधकः साधनं साध्यचर्याऽपि च विद्यते [न वा] इति न संदेहः। साधकोऽत्र संवृतिसत्यम्, साधनं परमार्थसत्यम्, अनेन साध्यमद्वयज्ञानम् अतो हेतुफलयोरद्वैधीकारपरिज्ञानमत्र भावना। यथोक्तं सर्वरहस्यतन्त्रे—

फलेन हेतुमामुद्र्य फलमामुद्र्य हेतुना ।
विभाव्यमन्यथासिद्धिं कल्पकोटिर्न जायते ।। इति।। (द्र०-गु० स० 18.78)

(च० मे० प्र०, पृ० 76-77)

**भुसुकचर्या**

भु इति भुक्त्वा तन्मात्रमनुस्मरति सङ्गममपहरति दुष्करैर्नियमैरिति किञ्चिन्न चिन्तनीयम्। सु इति सुप्त्वा एतद् विज्ञाय न विद्योपलक्षितं साक्षात्कुर्वीत सैवाविद्यांकुशा-कारं(रां)कितविज्ञानं पुनरावर्तयति प्रभास्वरमेव साक्षात्करोति निर्मलस्वभावम्। कु इति कुटिं गच्छेद् विण्मूत्रोत्सर्गार्थं तन्मात्रमनुभवति सङ्गमपनयति कायवेदनाविषयेन्द्रियस्वभावं च न चिन्तयेदिति। (च० मे० प्र०, पृ० 99)

**भूतदर्शनम् ( तत्त्वम् )**

नापनेयमतः किञ्चित् प्रक्षेप्तव्यं न किञ्चन ।
द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते ।। इति।।

(अभि० अ० 5.21; च० गी० को०, पृ० 32)

निष्पन्नक्रमस्यैतदधिवचनं यदुत भूतदर्शनमिति। (च० मे० प्र०, पृ० 103)

**मण्डलम् ( अभिसंबोधिलक्षणम् )**

अन्यत्र योगतन्त्रेऽप्याह—

सर्वाङ्गभावनातीतं कल्पनाकल्पवर्जितम् ।
मात्राबिन्दुसमातीतम् एतन्मण्डलमुत्तम् ।।

विशती(ति) यः सर्वभावानां रूपारूपेषु निर्मलम् ।
बोधितश्चोदितं चित्तं मण्डलं मण्डलाकृतिम् ।।(च० मे० प्र०, पृ० 65)

**मन्त्रतत्त्वम्**

तत्र वाग्विवेको नाम मन्त्रतत्त्वम्। तच्च वायुतत्त्वानुपूर्वेण विना न ज्ञायते। वायुतत्त्वं नाम प्राणायामः। (च० मे० प्र०, पृ० 21)

मन्त्रतत्त्वं नाम तत्त्वसंग्रहादौ मूलतन्त्रे चोत्तरतन्त्रे च केवलं मन्त्रमात्रमुदीरितं मन्त्रोद्धारो न प्रदर्शितः। व्याख्यातन्त्रे तु मन्त्रोद्धारो मन्त्रसंकेतो मन्त्रार्थो मन्त्रतत्त्वं च भगवता सद्भावेन विवृतम्। अतो व्याख्यातन्त्रमनधिगता बाह्यमन्त्रपरायणा न प्रजानन्ति। तस्माद् यत्नतः शृणु व्याख्यातन्त्रानुसारेण मन्त्रतत्त्वं ते प्रतिबोधयामि। तत्रेमेऽर्चादिमन्त्रा आलि-कालिसमुद्भवास्तेषां तत्त्वमनाहतोद्भवं त्र्यक्षरम्। यस्मात् सर्वमन्त्राः स्त्रीपुन्नपुंसकस्वभावा यथालब्धोपदेशेन त्र्यक्षरे प्रविशन्ति। तेन त्र्यक्षरः सर्वमन्त्राधिपतिः। ते च पुनरेकैकोऽनाहतेन सह त्रिभिस्त्रिभिरक्षरैर्निष्पन्नाः। अधुनाऽक्षरत्रयस्य व्यापारान्(रा) निर्दिश्यन्ते। तत्र तावत् त्रिसंयोगाद् देवतामूर्तिं निष्पादयति। स एव प्रवेशस्थितिव्युत्थानक्रमेण देहमहर्निशं धारयति। स एवालिकालिभिः द्वयेन्द्रियसमापत्तिकालेऽधोमुखो भूत्वा गुह्यनासिकाच्छिद्राच्छुक्ररूपेण विनिर्गत्य सत्त्वधातूनुत्पादयति। स एव प्राणायामेन सह पुनरूर्ध्वं गन्धेन्द्रियद्वारं प्रबोध्य संवृतिघ्राणद्वाराद् वामदक्षिणादिक्रमेण निर्गत्यानाभोगेन वज्रजापं कृत्वा पूर्वकर्मावरणं विशो-धयति। स एवाहोरात्रक्रमेण जपसंख्यामुपलभ्य वारुण्यादिमण्डलोदये सितादिवर्णमाश्रित्य शान्तिकादि सर्वकर्माणि करोति। स एवाक्षररूपेण परिकल्पिते नाभिस्पन्दितजिह्वाग्रेण कृत्येत्यादि वाग्जापलक्षणेन जपं कृत्वा बाह्यवर्णादिक्रियामाश्रित्य शान्तिकादि सर्वकर्माणि करोति। स एव त्र्यक्षरशोधनबोधनज्वलनक्रमेणाऽऽहारं विशोध्य निरामयं करोति। एवं कृते वरावस्थायां सर्वं कृत्वा पर्यन्तेऽनाहते प्रविश्य पुनरपि प्राकृतदेहमाश्रित्य तथैव सर्वं करोति।

(च० मे० प्र०, पृ० 26-27)

**मन्त्रः**

मन्त्रशब्दस्य निरुक्तिप्रकाशनेनैव सूचितं भगवता समाजोत्तरे (18.69-70)—

प्रतीत्योत्पद्यते यद्यदिन्द्रियैर्विषयैर्मनः ।।
तन्मनस्त्वशीतिख्यातस्त्रकारस्त्राणनार्थतः । इति।

(च० मे० प्र०, पृ० 44)

**महावज्रधरः**

अतश्चतुःशून्यैकीभूतमालोकं पुञ्जवत् खद्योतकाकारं सर्वलोकधात्ववभासिनं सूक्ष्मधातुसहितं छायाकारमच्छेद्याभेद्यवज्रकायस्वभावमच्युतमनास्रवं सर्वक्लेशवासनाविनिर्मुक्तमिच्छावशिताप्राप्तं जलान्मीनमिव सुप्तप्रबुद्धमिव परमानन्दमूर्तिस्वरूपं निष्पद्यते, यन्नामरूपात्मको महावज्रधर इति। (च० मे० प्र०, पृ० 70)

**महासुखम्**

द्वयेन्द्रियसमापत्त्या व्यायामविधिरन्तरे ।
हर्षचित्तं मुनेः सिद्धौ महासुखमिति स्मृतम् ।।

(च० मे० प्र०, पृ० 95)

**मायोपमसमाधिः (द्वादशमायादृष्टान्तः)**

ज्ञानवज्रसमुच्चयमहायोगतन्त्रेऽपीममेव मायोपमसमाधिं द्योतयन्नाह-चित्तचैतसिकमहायोगो महासुखसमाधिः। स मायादिदृष्टान्तैरुपलक्षितः। अतः सर्वतथागता गङ्गानदीबालुकोपमा बुद्धक्षेत्रा मायोपमा उदकचन्द्रोपमाः प्रतिभासोपमा मरीचिस्वप्नप्रतिश्रुत्कं गन्धर्वनगरमिन्द्रजालं शक्रायुधं विद्युद्बुद्बुददर्पणप्रतिबिम्बश्चेति द्वादशमायादृष्टान्तैर्महासुखसमाधिरुपलक्षितं भवति। एवं च दशदिग्व्यवस्थिताः सर्वतथागता आसंसारं यावद् मायोपमसमाधिना विहरन्ति पञ्चभिः कामगुणैः क्रीडन्ति रमन्ति परिचारयन्ति स्वेच्छया सर्वगुणान्विता बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रामन्ति। (च० मे० प्र०, पृ० 59-60)

**मोक्षः (बुद्धत्वपदम्)**

संसारबन्धनान्निर्मुक्तत्वात् मोक्ष इत्युच्यते। इममेवार्थं द्योतयन्नाह श्रीगुह्यसिद्धौ (पृ० 71-82)—

